# श्रीसप्तशतीसहस्रम्

सङ्कलनं तथा छन्दोबन्धनञ्च प्रकाशनम्।
दुर्गायाः सुमनस्तुष्ट्यै वर्ततां चात्मतृप्तये।।

भावकः
**बटोही झा**

केन्द्रीय-संस्कृत-विद्यापीठम्
विशाल-खण्डम्-४
गोमतीनगरम्
लखनऊ

# नैवेद्यम्

मातृदेवो भवेति श्रुत्यादिश्रुतोपदेशः। यन्मूला भारतीयसंस्कृतिः वैदिकपौराणिकसाहित्यिकशास्त्रीयलौकिकासु सर्वासु परम्परासु एकमयी लक्ष्यते। यद्वशाद् भारतभूमौ सर्वत्र गृहे-गृहे, जने-जने श्रीदुर्गासप्तशतीनामस्तोत्रस्य व्यापकप्रचारोऽस्ति। तत्स्तोत्रं शक्तितत्त्वनिरूपकत्वान्न केवलं शाक्ते, किञ्च शैवे वैष्णवेऽपि समाजे समानतया समादृतम्। न केवलं तान्त्रिकवर्गे स्मार्तसमाजेऽपि न च गृहस्थनिवहे भिक्षुसंघेऽपि पठनश्रवणानुष्ठानैः सकलपुरुषार्थप्रदायकं परं रहस्यतन्त्रं श्रीसप्तशतीस्तोत्रम्।

गीताप्रेसप्रकाशितश्रीदुर्गासप्तशतीस्तोत्रनामग्रन्थे श्रीदेवीचरितेन सहादावन्ते च कवचादीनि रहस्यत्रयादीनि नाना स्तोत्राणि निबद्धानि सन्ति।। मुख्यचरितपाठेन सह तेषामपि पाठस्य पारम्परिकविधानमस्ति। तेषु सर्वेषु श्रीभगवत्याः प्रभावमाहात्म्यगौरवस्वरूपप्रकाशकानि निसर्गसिद्धानि मनोहराणि पर्यायविशेषणपदानि कस्य भक्तस्य श्रद्धालोः सहृदयस्य चेतांसि न तोषयन्ति, तर्पयन्ति, रञ्जयन्ति च।

तदेतत्सर्वं मनसि कृत्वा तत्सर्वतस्तथाविधपदानि संकलय्य छन्दोबन्धनञ्च विधायेदं श्रीसप्तशतीसहस्रम् प्रकाशनाय प्रस्तुतम्। अत्र श्रीदुर्गाष्टोत्तरशतनामस्तोत्रस्य तथा श्रीदुर्गाद्वात्रिंशन्नाममालास्तोत्रस्य पदानि नैव संकलितानि। यतस्तयोर्मध्ये निरन्तरतया नामसंग्रहस्तु वर्तत एव। अन्यत्सर्वं समाहितम्। भाषानिबद्धारार्तिक्यस्तोत्रादपि पदानि गृहीतानि सहस्रसंख्यापूरणाय, ग्रन्थे प्रयुक्तानां केषाञ्चिद् पदानां भङ्गं विधायानेकधा संकलनं कृतम्। सर्वमेतत्सहृदयैः सुधीभिस्तथा चास्वादनीयम् यथा श्रीमहामायाप्रसादतः स्वरूपमिदं प्रस्फुटितम्।

एवं 'त्वमेव माता' 'सर्वस्वं सत्प्रीतिरिति'
व्यक्तित्वकृतित्वदोषमार्जनयाचकः

वसन्त-पञ्चमी
२७-१-९३

मातृसत्कृपाकांक्षी
बटोही

# नमस्तस्यै

ॐ अम्बा कात्यायनी काली कमला करुणामयी ।
अतुला कालिका कृष्णा कल्याणी कामरूपिणी ।।१।।

अर्धमात्रास्थिता कर्त्री कालातीता कलाधरी ।
अनुच्चार्या च कामाक्षी क्रुद्धा कैटभहारिणी ।।२।।

अनायस्तानना ख्यातिः कान्तिरूपाऽतिसुन्दरी ।
अम्बिका कामधेनुश्च कामदा चाखिलात्मिका ।।३।।

अरविन्दस्थिता पद्मा कुब्जिका करुणा कृतिः ।
अरुणा चारुणक्षौमा कुपिताऽरुणलोचना ।।४।।

अखिलदेवपूज्या च कमला कनकाम्बरा ।
अलक्ष्मीः कालरात्रिश्च कूष्माण्डा कालरूपिणी ।।५।।

अपारा कीर्तिता गौरी कौमारी करुणार्णवा ।
अव्याकृता जगन्मूर्तिश्चाविचिन्त्यमहाव्रता ।।६।।

अखिलशास्त्रसारा च देवी कारुण्यरूपिणी ।

अवतारत्रयाऽसङ्गा दुर्गा कामफलप्रदा ।।७।।

अतिसाधुमतिर्जाया जयन्ती चापराजिता ।
अपराऽतुल्यरूपा च नित्याऽसुरनिबर्हिणी ॥८॥

असुरवीर्यहन्त्री च नारी कनकभूषणा ।
आद्याऽतिहारिरूपा च किरीटिनी कुलेश्वरी ॥६॥

अतिसौम्याऽतिरौद्रा च कनकोत्तमभूषणा ।
अतिशुद्धगुणाऽभेद्या चानुपमपराक्रमा ॥१०॥

अयोनिजाऽतिचार्वङ्गी कामिकाऽभीष्टसंश्रया ।
विस्तारवदनाऽनन्ता कोपवत्यतिभीषणा ॥११॥

अणिमादिमयूखाप्ता कामिनी चामलानना ।
अर्धाम्बिकेशरूपा च कालाभ्राभाऽसिपाशिनी ॥१२॥

अत्युग्राऽनन्तवीर्या च कपालिन्यतिकोपना ।
जयाऽखिलजगन्माता कामेश्वर्यतिमानिनी ॥१३॥

अग्निवर्णाऽद्वितीया च कौबेरी चाखिलेश्वरी ।
अतिरौद्रावतारा च घोरा चासुरघातिनी ॥१४॥

अज्ञेयाऽपःस्वरूपा च किरीटोल्लिखिताम्बरा ।
अर्गलाऽलङ्घ्यवीर्या च ज्वलन्ती चानलात्मिका ।।१५।।

अनजा जननी नन्दा गुह्यध्यानाऽग्निदेवता ।
अनघा घोररूपा च नियताऽनाथसंस्तुता ।।१६।।

अजा गुह्यतरध्याना चारिसंक्षयकारिणी ।
अजिताऽन्तर्हिताऽलक्ष्या गुणाश्रयाऽमितप्रभा ।।१७।।

अभिष्टुता दयारूपा चालङ्कृतचतुर्भुजा ।
आर्याऽमृतकलाऽविद्या नीलवर्णाञ्जनप्रभा ।।१८।।

अचिन्त्यचरिताऽमर्त्या जगन्माताऽम्बुजासना ।
अष्टादशभुजाऽपर्णा चाभीष्टफलदायिका ।।१९।।

अलङ्कृतभुजाऽतीता नन्दजाऽभयहस्तका ।
अष्टभुजा जगद्धात्री जगत्त्रयहितैषिणी ।।२०।।

असमाऽऽनन्दरूपा च प्रथमाऽगोचराऽकला ।
अनानन्दस्वरूपाऽपि नवदुर्गाऽष्टमातृका ।।२१।।

अनामयी ह्यविज्ञाना निराकाराऽविनाशिनी ।
अमलाऽब्रह्मरूपा च [illegible] चराचरेश्वरी ।।२२।।

अपञ्चभूतरूपा च चन्द्ररेखाविभूषणा।
परमाऽखिलरूपा च चण्डमुण्डविनाशिनी ।।२३।।

चेतनाऽवेदरूपा च चण्डिका चण्डविक्रमा ।
उर्ध्वमधःस्वरूपा च तिर्यग्रूपा तमोगुणा ।।२४।।

असुरनाशयित्री च चित्राभरणभूषिता।
अदितिर्देवशक्तिश्च दीनत्राणपरायणा ।।२५।।

अभयदा महागौरी महाभयविनाशिनी।
अनादिश्च निराधारा नयनत्रयशोभिता ।।२६।।

अविचला चतुर्बाहुश्चन्द्रघण्टा च चर्चिका।
एकाऽभेदमयी नैका तुष्टा कल्याणशोभना ।।२७।।

गौरीदेहसमुत्पन्ना नीलग्रीवाऽविकारिणी ।
कलाकाष्ठादिरूपा च चक्रिणी कृष्णसंस्तुता ।।२८।।

कनकोत्तमकान्तिश्च चित्रघण्टाऽघहारिणी।
आद्यवाक्यमयी पूज्या चार्तत्राणपरायणा ।।२९।।

आराधिताऽऽत्ममूर्तिश्च तेजोराशिसमुद्भवा ।
आदिविद्याऽऽत्मशक्तिश्च तुहिनाचलसंस्थिता ॥३०॥

आनन्दविग्रहा तुष्टिस्तारिणी तनुमध्यमा।
आदिः कनकवर्णाभा पूर्णाऽऽनन्दपयोनिधिः ॥३१॥

ईशाऽऽनन्दमयी ब्राह्मी ब्रह्माणीरूपधारिणी ।
वराऽऽपच्छमनी विद्या भद्राऽऽभरणभूषिता ॥३२॥

इन्दुयोग्यानना चैन्द्री दैत्यवधकृतोद्यमा ।
इन्दुशकलभूषा च भवती भक्तवत्सला ॥३३॥

इन्द्राणी चेन्दुरूपा च प्रातःसूर्यसमप्रभा ।
इन्दिरेन्दुकिरीटा च रविचन्द्राग्निलोचना ॥३४॥

उग्रनृसिंहरूपा च गुणत्रयविभाविनी ।
ईश्वरी चैकवीरा च गौरीदेहसमुद्भवा ॥३५॥

उद्योतिनी महारौद्रा चेन्द्राणीपतिपूजिता ।
उमा चेन्दुप्रभा पत्नी परिणामप्रदायिनी ॥३६॥

ईषद्धासा महादेवी महामाया महेश्वरी ।

उन्मदा भीमरूपा च भीमादेवी च भीषणा ॥३७॥

उत्तमभूषणा लक्ष्मीः लोकेश्वरी च लासिनी ।
उदारसंस्तुता बुद्धिर्ब्रह्माणी बोधलक्षणा ।।३८।।

ऋद्धिदात्री रमा रौद्रा रक्तालिप्तपयोधरा ।
रक्तबीजवधा रुष्टा चोल्लसद्रत्नकुण्डला ।।३९।।

सुकर्मफलजुष्टा च कान्तिभृत्कमलालया ।
कौमारीरूपसंस्थाना कौशिकी कान्तिशालिनी ।।४०।।

कह्लाराबद्धमाला च ललिता कमलासना ।
करुणापूरिताक्षी च तथोत्पलविलोचना ।।४१।।

रुचिरोत्तमकान्तिश्च खड्गिनी खड्गधारिणी ।
घनस्तनी तथोत्तुङ्गस्तनी पीनपयोधरा ।।४२।।

ध्रुवोर्ध्वकेशिनी धूम्रा धात्री धूम्राक्षमर्दिनी ।
धनुर्धरी च दुर्धर्षा दुर्गा च धर्मधारिणी ।।४३।।

कौशाम्भःक्षरिका लज्जा लोचनत्रयभूषिता ।
लक्ष्यालक्ष्यस्वरूपा च लोकख्याता फलप्रदा ।।४४।।

करालवदना सन्ध्या क्रोधसमाकुला क्षुधा ।
सुकामधेनुमूर्तिश्च खड्गादिभृच्च खेचरी ।।४५।।

सौम्या कान्तिप्रतिष्ठा च गदिनी गुहरूपिणी ।
गम्भीरान्तःस्मिता सुभ्रूः स्त्रीरत्नं सुमनोहरा ।।४६।।

गजराजस्थिता सिद्धिः शुद्धा गरुडसंस्थिता ।
गुणमयी महावज्रा महाघोरपराक्रमा ।।४७।।

गृहीतोग्रमहाचक्रा गृहीतपरमायुधा ।
गृहवृद्धिप्रदा सारा सुपथा गरुडासना ।।४८।।

शक्तिर्गजसमारूढा सर्वसौभाग्यदायिनी ।
गुह्येश्वरी महाविद्या गुह्यगोप्त्री प्रकीर्तिता ।।४६।।

सती गम्भीरनाभिश्च चिकितुषी चतुर्भुजा ।
गुह्यातिगुह्यगोप्त्री च पूजिता प्रमदोत्तमा ।।५०।।

घनान्तशशितुल्याभा चिन्मयी चित्रकान्तिभृत् ।
चण्डघाती च चामुण्डा सृष्टिश्चित्तकृपामयी ।।५१।।

चित्रभ्रमरपाणिश्च चितिरूपा च चापिनी ।

सीता चञ्चलापाङ्गी सिता चित्रविभूषणा ।।५२।।

तैजसी चिन्मयातीता चूडामणिर्महाबला ।
देवेशी चिन्मयानन्दा सा चतुर्वक्त्रसंस्तुता ।।५३।।

ज्योत्स्ना चन्द्रार्धचूडा च चित्रमाल्या महास्मृतिः ।
चित्रकोद्भासिभाला च चित्राम्बरा महासुरी ।।५४।।

तामसी चण्डिकाशक्तिः शिवाशतनिनादिनी ।
जयाख्या जगतां धात्री जातिरूपा प्रदर्शिनी ।।५५।।

छायारूपा च पापघ्नी निद्रा चित्रानुलेपना ।
छत्रेश्वरी शताक्षी च शत्रुभयविवर्धिनी ।।५६।।

जगदाधारभूता च जगदम्बा जगन्मयी ।
पुष्टिर्जगत्प्रतिष्ठा च पावना जगदम्बिका ।।५७।।

ज्वालामुखी महारावा जिह्वाललनभीषणा ।
सर्वा जगत्समस्तस्त्री भैरवी जम्भनादिनी ।।५८।।

सा जगज्जननी श्यामा शोभना शशिशेखरा ।
सा जगत्पालिका श्रद्धा शाम्भवी शूलधारिणी ।।५९।।

तृष्णारूपा तृषा शर्वा तुष्टिरूपा च पालिका ।
तुङ्गकुचा त्रिनेत्रा च ताम्राम्भोजनिवासिनी ।।६०।।

तप्तकाञ्चनवर्णाभा तप्तकाञ्चनभूषणा ।
तीक्ष्णनखा च निष्कीला नवशक्तिस्तनूदरी ।।६१।।

तेजोमण्डलदुर्धर्षा ताण्डवलासिनी शिवा ।
तृष्णा तपोज्ज्वलन्ती च पूतना तलवासिनी ।।६२।।

दुर्वृत्तवृत्तहन्त्री च दुर्गपारा च दण्डिनी ।
दिवाकरनिभा राष्ट्री दैत्यदर्पविनाशिनी ।।६३।।

द्वीपिचर्मपरीधाना दंष्ट्रोद्धृतवसुन्धरा ।
नयनत्रययुक्ता च दारुणा दशनोज्ज्वला ।।६४।।

स्वाहा दंष्ट्राकरालास्या दुर्गमा द्वारवासिनी ।
दशवक्त्रा च दुष्प्रेक्ष्या दंष्ट्राङ्कितवरानना ।।६५।।

देवता दशविद्या च दारिद्र्यदुःखहारिणी ।
स्तुता दंष्ट्राकराली च भवसागरनौः क्षमा ।।६६।।

दुरत्यया महाकाली मृडानी दुरितापहा ।
दशभुजा महामारी दशपादा दशानना ।।६७।।

दिव्यमूर्तिर्महावाणी सुधा देवोपकारिणी ।
दुर्गार्तिनाशिनी क्षान्तिर्दुराचारविघातिनी ।।६८।।

दुर्गतिहारिणी दुर्गा स्वरा दशनभासुरा ।
भर्त्री दानवहन्त्री च सा दुष्टदमनी तथा ।।६९।।

दुरितशमनी राधा विहारिणी विलासिनी ।
रूद्ररूपा च रूद्राणी भवानी भवभामिनी ।।७०।।

दुर्गप्रशमनी दुर्गा सा दंष्ट्राभासुरा तथा ।
वाणी धृतेन्दुलेखा च सा दक्षदुहिता सुखा ।।७१।।

धनुर्बाणधरा दुर्गा निजशस्त्रास्त्रवर्षिणी ।
दुर्गा धूर्जटिपत्नी च नानारत्नोपशोभिता ।।७२।।

शक्तिसमूहमूर्तिश्च निद्रारूपा च धीश्वरी ।
नन्दगोपगृहोत्पन्ना वेदगर्भा व्रजेश्वरी ।।७३।।

वेदत्रयी च धेनुर्वाक् नैर्ऋतिर्नलकूबरी ।
नारायणी महालक्ष्मीर्नीलोत्पलविलोचना ।।७४।।

विलसच्चोलिका दुर्गा धर्ममतिप्रदायिनी ।
नानाभरणशोभाढ्या निशुम्भासुरघातिनी ।।७५।।

नानाशस्त्रकरा दुर्गा सा नीलाश्मद्युतिः स्वधा ।
नवनवस्वरूपा च नागाधीश्वरविष्टरा ।।७६।।

त्रयी निखिलमूर्तिश्च नयनत्रयभासिता ।
सा नीरजकरा दुर्गा नादापूर्णदिगम्बरा ।।७७।।

प्रसन्ना परमा विद्या परा च परमेश्वरी ।
सा पुण्डरीकमध्यस्था प्रकृतिः पुत्रदायिनी ।।७८।।

पापप्रशमिनी दुर्गा नरमालाविभूषणा ।
पापापहारिणी दुर्गा नादापूरितदिङ्मुखा ।।७९।।

सा पञ्चभूतरूपा च निमग्नारक्तलोचना ।
नारसिंही भयत्रात्री निशुम्भमर्दिनी तथा ।।८०।।

नीलभुजा महारात्रिर्दुर्गा नानाभिधानभृत् ।
मातङ्गी नीलजङ्घोरुर्निशुम्भमथिनी तथा ।।८१।।

पद्मावती परोक्तिश्च प्रपन्नार्तिहरा तथा ।
प्रतिष्ठा परमा माया पार्वती पापनाशिनी ।।८२।।

सा परमार्तिहन्त्री च परमा प्रकृतिस्तथा ।
प्रसादसुमुखी दुर्गा सुप्रसन्नानना तथा ।।८३।।

परितुष्टा महामेधा भवानी परमायुधा ।
प्रेतसंस्था च भीमाक्षी पद्महस्ता हरिप्रिया ।।८४।।

पद्मासना महापूर्वा पुण्येश्वरी च योगिनी ।
पापेश्वरी महामोहा पीनस्तनी समस्तनी ।।८५।।

प्रचण्डदैत्यदर्पघ्ना पाशाङ्कुशधरा तथा ।
प्रतिमा परिपूर्णा च परधामनिवासिनी ।।८६।।

सा परा देवता दुर्गा फलदा प्रतिपालिका ।
परशिवा च शर्वाणी सा शम्भुगृहिणी तथा ।।८७।।

परसिद्धिप्रदा भूतिः सा प्रलयमयी तथा ।
ब्रह्मस्तुता च सावित्री बुद्धिरूपा च भारती ।।८८।।

बद्धहिमांशुरत्नाभा भुशुण्डीपरिघायुधा ।
ब्रह्मशक्तिश्च यज्ञिया सुष्ठुला फलदायिका ।।८९।।

बन्धूककाञ्चनाभा च बालरविद्युतिस्तथा ।
बाधाप्रशमनी दुर्गा बीजरूपा च बाभ्रवी ॥६०॥

बालार्कमण्डलाभासा बहुकन्यासुसेविता ।
ब्रह्मादिरूपिणी दुर्गा मङ्गला ब्रह्मचारिणी ॥६१॥

ब्रह्मस्वरूपिणी मेधा ब्रह्मरूपा सुरेश्वरी ।
भक्तकामदुघा दुर्गा सा बाधाहारिणी तथा ॥६२॥

दुर्गा भक्तानुरक्ता च भगवती च भूषिता ।
भुक्तिप्रदायिनी दुर्गा भद्रकाली सनातनी ॥६३॥

भानुसहस्रकान्तिश्च भूभृल्लक्ष्मीश्च शङ्खिनी ।
भ्रान्तिरूपा महोत्साहा भास्वद्देहलता तथा ॥६४॥

भुवनेशी विशोका च दुर्गा भैरवनादिनी ।
भक्तिस्मृता सुगन्धा च भ्रामरी भूमिसम्भवा ॥६५॥

दुर्गा भूमुक्तिहेतुश्च भक्तानन्दोदया तथा ।
सा भिन्नाञ्जनसंकाशा भोगस्वर्गापवर्गदा ॥६६॥

दुर्गा भ्रामररूपा च भूतस्थितिविधायिनी ।
भाषाक्षरा सुमाता च दुर्गा भूतार्तिहारिणी ॥६७॥

सा मुक्तिहेतुभूता च दुर्गा भयविनाशिनी ।
मातृरूपा सुरूपा च संहर्त्री भवतारिणी ।।९८।।

मुक्तिहेतुः सुरश्रेष्ठा सन्मयी भयहारिणी ।
माहेश्वरी शरण्या च दुर्गा भेदप्रदर्शिनी ।।९९।।

मौलिबद्धेन्दुरेखा च महावृषभवाहिनी ।
सा महाकालिका माता मधुकैटभघातिनी ।।१००।।

महाहिवलया माया तथा महिषवाहिनी ।
मोहरात्रिश्च वाराही सुमधुमदमाधुरी ।।१०१।।

दुर्गा मातृगणा वृद्धिर्मयूरवरवाहना ।
मालाधरी च सर्वाद्या महाशक्तिधरा तथा ।।१०२।।

माहेश्वरीस्वरूपा च सुन्दरी मुकुटेश्वरी ।
दुर्गा महीस्वरूपा च महाकारुण्यरूपिणी ।।१०३।।

महामारीस्वरूपा च मातृका मुनिसंस्तुता ।
महिषासुरनिर्णाशी दुर्गा मृगपतिस्थिता ।।१०४।।

मूर्तिरूपा च सर्वेशा मयूरकुक्कुटावृता ।
मुक्तिप्रदायिनी दुर्गा सुभगा महिषासना ।।१०५।।

महिषान्तकरी दुर्गा त्रिगुणा मृगवाहिनी ।
सा मुण्डमथना दुर्गा शुभा महिषमर्दिनी ।।१०६।।

त्र्यम्बका योगनिद्रा च महात्रिपुरसुन्दरी ।
साक्षिणी यमघण्टा च महादुर्गविनाशिनी ।।१०७।।

यज्ञियप्रथमा दुर्गा श्रीप्रदा मन्त्रमातृका ।
दुर्गा योगेश्वरी शान्तिः शूलिनी मधुमर्दिनी ।।१०८।।

रूक्माम्बुजासना दुर्गा शाङ्करी महिषार्दिनी ।
सा रुचिराक्षमाला च सत्वरा मन्त्ररूपिणी ।।१०९।।

सा मूलप्रकृतिर्दुर्गा मूलाधारनिवासिनी ।
महाविलासिनी दुर्गा मोहिनी मुनिमोहिनी ।।११०।।

दुर्गा रूपप्रतिष्ठा च यशोदागर्भसम्भवा ।
वैष्णवी रथमारूढा रत्नभूता यशस्विनी ।।१११।।

शिवदा रक्तवर्णा च विजया रूपशालिनी ।

वारुणी रक्तवस्त्रा च दुर्गा रक्ताम्बरा तथा ।।११२।।

सुगता रक्तपादा च सकला रक्तदन्तिका ।
साकारा रक्तमध्या च रक्तसर्वाङ्गभूषणा ।।११३।।

सुकान्ती रक्तनेत्रा च रक्तकेशातिभीषणा ।
सा रक्तदशना दुर्गा रक्ततीक्ष्णनखा तथा ।।११४।।

सा दुर्गा रक्तचामुण्डा दुर्गा रक्तायुधा तथा ।
सा दुर्गा रक्तकेशा च रणत्कङ्कणनूपुरा ।।११५।।

सा रक्तवसना दुर्गा रक्तदन्ती त्रिधोदिता ।
रसभावितवृत्ता च दुर्गा रत्नविभूषिता ।।११६।।

सा लम्बोदरमाता च लक्ष्मीरूपा च वाक् तथा ।
दुर्गा लज्जास्वरूपा च सा लोकवरदा तथा ।।११७।।

वृत्तस्तनी तथा दुर्गा विशाला वसुधासमा ।
दुर्गा विज्ञानरूपा च तथा वृत्तपयोधरा ।।११८।।

वरदा वेदरूपा च दुर्गा विश्वेश्वरी तथा ।
व्याप्तलोकत्रया दुर्गा वराभीतिप्रधारिणी ।।११९।।

वैरिदयावती दुर्गा वन्दिताङ्घ्रियुगा तथा ।
सा दुर्गा विष्णुमाया च व्याप्तस्थावरजङ्गमा ॥१२०॥

वल्लकीवादिका दुर्गा विश्वसम्मोहिनी तथा ।
विश्वोपरतिशक्ता च दुर्गा वेधस्स्तुता तथा ॥१२१॥

सा दुर्गा वृत्तिरूपा च चित्रखट्वाङ्गधारिणी ।
सा दुर्गा व्याप्तिदेवी च विश्वविश्रामिका तथा ॥१२२॥

वृषारूढा तथा दुर्गा विद्युद्दामसमप्रभा ।
वरदाभीतिहस्ता च दुर्गा विस्तारितानना ॥१२३॥

वज्रहस्ता तथा दुर्गा विद्यामयी व्यवस्थिता ।
वृत्रप्राणहरा दुर्गा विन्ध्याचलनिवासिनी ॥१२४॥

वराहरूपिणी दुर्गा विश्वार्तिहारिणी तथा ।
सा दुर्गा वैष्णवी शक्तिर्विश्वबीजं त्रिलोचना ॥१२५॥

सा दुर्गा वैष्णवीरूपा तथा व्याधिविनाशिनी ।
दुर्गा विवेकदीपा च वीणापुस्तकधारिणी ॥१२६॥

विशाललोचना दुर्गा सा विश्वपरिपालिका ।

सा विश्वधारिणी दुर्गा तथा वैरिविनाशिनी ॥१२७॥

विश्वात्मिका तथा दुर्गा विधातृवरदा तथा ।
दुर्गा विश्वेशवन्द्या च दुर्गा च वित्तदायिनी ।।१२८।।

व्याप्तसकलविश्वा च दुर्गा च वृषवाहना ।
वागीश्वरी तथा दुर्गा सा विद्याकारिणी तथा ।।१२९।।

दुर्गा विज्ञानदात्री च दुर्गा च विन्ध्यवासिनी ।
सा विश्वमोहिनी दुर्गा तथैव विश्वरूपिणी ।।१३०।।

वज्रपाणिस्तथा दुर्गा तथैव वरदायिनी ।
विश्वमाता तथा दुर्गा तथैव वज्रधारिणी ।।१३१।।

वसुसङ्गमनी दुर्गा तथा वरदहस्तका ।
विख्यातिगा तथा दुर्गा तथैव वागधीश्वरी ।।१३२।।

वाञ्छाकल्पद्रुमा दुर्गा वैरोचनी विभूषिता ।
सा विकटस्वरूपा च दुर्गा विधिवधूस्तथा ।।१३३।।

शोभाधारा तथा दुर्गा विमला शमिताशिवा ।
विवसना तथा दुर्गा सा शिरोमालिका तथा ।।१३४।।

शङ्खचक्रगदाहस्ता शङ्खादिपरमायुधा ।
श्रीस्तथा श्यामलाङ्गी च दुर्गा श्रीसुन्दरी तथा ।।१३५।।

सा शुभमतिदा दुर्गा शुभगतिप्रदायिनी ।
श्वेतरूपधरा दुर्गा तथा शोकविनाशिनी ।।१३६।।

शशिमौलिप्रतिष्ठा च दुर्गा शब्दात्मिका तथा ।
सा शत्रुभयरूपा च शुम्भदैत्यार्दिनी तथा ।।१३७।।

सा दुर्गा शक्तिरूपा च शुष्कमांसातिभैरवा ।
सा दुर्गा शान्तिरूपा च सा शब्दज्ञानरूपिणी ।।१३८।।

श्रद्धारूपा तथा दुर्गा शुम्भनिबर्हिणी तथा ।
सा दुर्गा शुभहेतुश्च सा शून्याशून्यसाक्षिणी ।।१३९।।

शङ्खपात्रा तथा दुर्गा शिरोमालाविभूषणा ।
सा दुर्गा शक्तिहस्ता च सा शूलचक्रभृत्तथा ।।१४०।।

सा शिवशक्तिरूपा च दुर्गा शशिमुखी तथा ।
शिवदूती तथा दुर्गा सा शुम्भमर्दिनी तथा ।।१४१।।

सा शरणागतत्राणा दुर्गा शास्त्रमयी तथा ।
सा परमायुधा दुर्गा तथैव शववाहना ।।१४२।।

शिवदूतीस्वरूपा च दुर्गा शाकम्भरी तथा ।
श्रीशाम्भवी तथा दुर्गा तथैव शिखिवाहना ।।१४३।।

सा दुर्गा शैलपुत्री च दुर्गा शशिधरा तथा ।
सा दुर्गा श्रीमहाविद्या दुर्गा शूलेश्वरी तथा ।।१४४।।

शुम्भहन्त्री तथा दुर्गा सा श्मशानविहारिणी।
शक्तिधरी तथा दुर्गा सकलोद्धारिणी तथा ।।१४५।।

सा दुर्गा सत्यरूपा च दुर्गा शब्दमयी तथा ।
सकलशब्दरूपा च सा भक्तिरसभाविता ।।१४६।।

श्वेतानना तथा दुर्गा सर्वकामफलप्रदा ।
स्फुरत्कान्तिस्तथा दुर्गा सर्वरूपमयी तथा ।।१४७।।

दुर्गा सर्वाङ्गभूषा च तथा सर्वजगन्मयी ।
संसारबन्धहेतुश्च तथा सर्वेश्वरेश्वरी ।।१४८।।

वषट्कारा तथा दुर्गा स्थितिसंहारकारिणी ।

स्वरात्मिका तथा दुर्गा समुत्पन्ना तथा स्वयम् ।।१४९।।

सा दुर्गा सृष्टिरूपा च सा सरोजस्थिता तथा ।
स्थितिरूपा तथा दुर्गा सदाभ्युदयदा तथा ।।१५०।।

दुर्गा संहृतिरूपा च तथैव सिंहवाहिनी ।
सम्मानिता तथा दुर्गा तथा सैरिभमर्दिनी ।।१५१।।

सुरर्षिस्तूयमाना च सिद्धिकामसुसेविता ।
सिंहस्कन्धाधिरूढा च दुर्गा सर्वाश्रया तथा ।।१५२।।

दुर्गा सर्वजगद्वार्ता तथा सूर्यसमप्रभा ।
सा समस्तजगद्धेतुः स्मृतिभीतिहरा तथा ।।१५३।।

सा दुर्गा सर्वशक्तिश्च दुर्गा सौम्यतरा तथा ।
सा सर्वव्यापिनी दुर्गा तथा समरनिष्ठुरा ।।१५४।।

दुर्गा सदाऽऽर्द्रचित्ता च दुर्गा च सर्वकारिणी ।
स्मृतिरूपा तथा दुर्गा सहस्रनयना तथा ।।१५५।।

दुर्गा समस्तविद्या च दुर्गा सरस्वती तथा ।
दुर्गा स्त्रीरत्नभूता च साक्षसूत्रकमण्डलुः ।।१५६।।

अब्जन्यस्तैकपादा च तथा सर्वार्थसाधिका ।

सा सर्वज्ञेश्वराङ्कस्था सर्वशक्तिसमन्विता ।।१५७।।

स्मेरमुखी तथा दुर्गा स्वर्गमुक्तिप्रदायिनी ।
सा दुर्गा सर्वभूता च सर्वयोगसमन्विता ।।१५८।।

सर्वमङ्गलमङ्गल्या संसारार्णवतारिणी ।
सृष्ट्यादिशक्तिभूता च स्वर्गापवर्गदा तथा ।।१५९।।

स्तव्यपरा तथा दुर्गा सहस्रनयनोज्ज्वला ।
सा सर्वभीतिपात्री च सिंहस्था सर्वमङ्गला ।।१६०।।

सर्वस्यार्तिहरा दुर्गा सर्वाभरणभूषिता ।
दुर्गा सर्वस्वरूपा च सर्वकामप्रदायिनी ।।१६१।।

सिद्धिदात्री तथा दुर्गा स्वर्णाकल्पितकुण्डला ।
सम्पूजिता तथा दुर्गा सर्वशत्रुविनाशिनी ।।१६२।।

सा दुर्गा स्कन्दमाता च दुर्गा सर्वगता तथा ।
सा सौभाग्यप्रतिष्ठा च दुर्गा सप्तशती तथा ।।१६३।।

सा सत्त्वाख्यगुणा दुर्गा सर्वसत्त्वमयी तथा ।
सुरासुरशिरोरत्ननिघृष्टचरणा तथा ।।१६४।।

स्फुरद्दशनदंष्ट्रा च सुमेरुयुगलस्तनी ।
सा सहस्रभुजा दुर्गा सुचित्रजघना तथा ।।१६५।।

सौभाग्यशालिनी दुर्गा सच्चिदानन्दविग्रहा ।
सर्वदेवमयी दुर्गा सर्वदेवशरीरजा ।।१६६।।

सर्वेश्वरी तथा दुर्गा सर्वलोकमहेश्वरी ।
सर्वाङ्गभूषणा दुर्गा सर्वानन्दपयोनिधिः ।।१६७।।

सर्वभयापहा दुर्गा सर्वकामदुघस्तनी ।
सुकर्कशस्तनी दुर्गा सुश्वेतस्तनमण्डला ।।१६८।।

सा सिद्धकुञ्जिका दुर्गा सा सत्त्वैकगुणाश्रया ।
सुखमयी तथा दुर्गा तथैव सुरमोहिनी ।।१६९।।

स्नेहमयी तथा दुर्गा सर्वबाधापहारिणी ।
सिद्धिप्रदा तथा दुर्गा तथैव सा सुधामयी ।।१७०।।

हृत्संस्थिता तथा दुर्गा हरिनेत्रकृतालया ।
हंसयुक्तविमानस्था हिमाचलकृताश्रया ।।१७१।।

दुर्गा हंससमारूढा हतदैत्यमहाबला ।
हिमाचलसुता दुर्गा त्रिशूलवरधारिणी ।।१७२।।

हिमाचलसुतानाथसंस्तुता ज्ञानरूपिणी ।
हृत्पुण्डरीकमध्यस्था दुर्गा हस्ताम्बुजा तथा ।।१७३।।
क्षोभिताशेषपाताला दुर्गा क्षेमकरी तथा ।
क्षुधारूपा तथा दुर्गा त्रिधामात्रात्मिका तथा ।।१७४।।
सा दुर्गा क्षान्तिरूपा च दुर्गा त्रिपुरसुन्दरी ।
दुर्गा त्रिजगदाधारा त्रिंशल्लोचनमालिका ।।१७५।।
दुर्गा त्रैलोक्यवासीड्या त्रिदशपरिवेष्टिता ।
त्रैलोक्यत्राणयुक्ता च त्रिशूलचन्द्रधारिणी ।।१७६।।
दुर्गा वक्त्रारविन्दश्रीर्दुर्गा त्रिनयना तथा ।
सा ज्ञानचिन्मयातीता स्वयञ्च ज्ञानचिन्मयी ।।१७७।

।। नमस्तस्यै नमो नमः ।।

दुर्गासप्तशतीस्तोत्रं यथा लोके महीयते ।
मधुरं मधुरानन्दे सहस्रमपि कल्पताम् ।।१७८।।
दुर्गा भक्तसुभावभावितमनाः प्रेमास्पदं प्रापिता
हर्षोल्लासविनोदमोदकरुणासन्तानसंकाशिका ।
सुप्रीता मुदिता स्तुता विनयिता सम्पूजिता वन्दिता
माङ्गल्यं वितनोतु लोकजननी स्तोतुः सहस्रात्मिका ।।१७९।।

# श्रीविन्ध्यवासिन्यै नमः

"सौवर्णाम्बुजमध्यगां त्रिनयनां सौदामिनीसन्निभां
शङ्खं चक्रवराभयानि दधतीमिन्दोः कलां बिभ्रतीम् ।
ग्रैवेयाङ्गदहारकुण्डलधरामाखण्डलाद्यैः स्तुतां
ध्यायेद् विन्ध्यनिवासिनीं शशिमुखीं पार्श्वस्थपञ्चाननाम्" ।।

## दशपदी

सिंहस्था मृगराजगा च विजया दुर्गा च पद्मावती
नागाधीश्वरविष्टरा च ललिता लक्ष्मीः सरोजस्थिता ।
मातङ्गी च सुरत्नपीठपदवी स्तुत्याश्च सर्वाः परं
सौवर्णाम्बुजमध्यगा विजयते तासां हि विन्ध्येश्वरी ।।१।।

हस्तास्याङ्घ्रिदशा परं त्रिनयना देवी महाकालिका
दुर्गा सिद्धिकरी जया शशिधरा ध्याता त्रिनेत्रा सताम् ।
आराध्या भुवनेश्वरी शिवशिवा युक्ता त्रिभिर्लोचनैः
सौम्या बाहुचतुष्टया त्रिनयना विन्ध्येश्वरी शङ्करी ।।२।।

नीलाश्मद्युतिकालिका भगवती कालाभ्रतुल्या जया
विद्युद्दामसमा दिवाकरनिभा दुर्गा च पद्मावती ।
ध्यातव्या च सरस्वती मतिमतां शीतांशुतुल्यप्रभा
दृश्या विन्ध्यनिवासिनी कलियुगे सौदामिनीसन्निभा ।।३।।

खड्गादिं दधती करैः सुविदिता श्यामाऽसतां भीषणा
मालाकुम्भकपालनीरजकरा पद्मावती संस्तुता ।
बालानां भुवनेश्वरी नहि तथा सौम्या सपाशाङ्कुशा
शङ्खं चक्रवराभयानि दधती विन्ध्येश्वरी वैष्णवी ।।४।।

देवी बद्धहिमांशुरत्नमुकुटा मूर्धेन्दुरेखा जया
मातङ्गी शशिखण्डधा शशिधरा दुर्गा च कामेश्वरी ।
ध्यातव्या भुवनेश्वरीन्दुमुकुटा चन्द्रार्धपद्मावती
विन्ध्ये काऽपि निरीक्ष्यते सहृदयैरिन्दोः कलां बिभ्रती ।।५।।

काली सर्वविभूषणावृतवपुः कह्लारमालाश्रिया
मातङ्गी करुणातरङ्गितदृशा स्तुत्या भवानी सती ।
भास्वद्देहलता सुरत्ननिवहैः पद्मावती, विन्ध्यगा
ग्रैवेयाङ्गदहारकुण्डलधरा भूषामृदुर्माधवी ।।६।।

आदौ संस्तुतवांस्तथा कमलजो बोधाय कालीं हरेः
सिद्धयर्थं सुजनैर्जया सुरवृता कन्याभिरासेविता ।
ध्यातव्या ह्यणिमादिभिश्च किरणैः काम्यैर्भवानी वृता
विन्ध्यस्था शरणं स्वतो भुवि परञ्चाखण्डलाद्यैः स्तुता ।।७।।

भक्तानां वितनोति सौख्यनिकरं लक्ष्मीः प्रसन्नानना
मातुः पालनशिक्षणं वितनुते वक्त्रारविन्दश्रिया ।
संसारे भुवनेश्वरी स्मितमुखी स्तोतुश्च दाने सदा
विन्ध्याद्रौ पृथुलोचना शशिमुखी तापौषधिर्दर्शनात् ।।८।।

सिंहस्कन्धगता जया मृगपतिस्कन्धे च दुर्गा स्थिता
सर्वज्ञेश्वरभैरवाङ्कनिलया पद्मावती सुप्रिया ।
सिंहः पार्श्वगतः शिवोऽथ दयितः पञ्चाननो द्वावपि
प्रीतिं विन्ध्यगतोभर्यीं वितनुते पार्श्वस्थपञ्चानना ।।६।।

आख्याने प्रथमे स्तुता सुविधिना काली द्वितीये ततो
लक्ष्मीश्चापि सरस्वती च महती सर्वा तृतीयेऽन्ततः ।
मातङ्गी भुवनेश्वरी च विजया दुर्गा भवानी शिवा
तासां विन्ध्यनिवासिनी सकरुणा गङ्गासखीलोचना ।।१०।।

विन्ध्याचलनिवासिन्याः स्थानं सर्वोत्तमोत्तमम् ।
सा सम्मुखगतानां हि प्रीणाति विन्ध्यवासिनी ॥११॥
श्रीविन्ध्यवासिनी माता गीता दशपदीस्तुतिः ।
वितनोतु सतां मोदं सर्वमङ्गलसंयुतम् ॥१२॥

॥ इति शम् ॥